॥ दक्षिणामूर्त्युपनिषत् ॥

यन्मौनव्याख्यया मौनिपटलं क्षणमात्रतः ।
महामौनपदं याति स हि मे परमा गतिः ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ ब्रह्मावर्ते महाभाण्डीरवटमूले महासत्राय समेता
महर्षयः शौनकादयस्ते ह समित्पाणयस्तत्त्वजिज्ञासवो
मार्कण्डेयं चिरऽजीविनमुपसमेत्य पप्रच्छुः केन त्वं
चिरं जीवसि केन वानन्दमनुभवसीति । परमरहस्यशिव-
तत्त्वज्ञानेनेति स होवाच । किं तत्परमरहस्यशिवतत्त्वज्ञानम् ।
तत्र को देवः । के मन्त्राः । को जपः । का मुद्रा । का निष्ठा ।
किं तज्ज्ञानसाधनम् । कः परिकरः । को बलिः । कः कालः ।
किं तत्स्थानमिति । स होवाच । येन दक्षिणामुखः शिवोऽपरोक्षीकृतो
भवति तत्परमरहस्यशिवतत्त्वज्ञानम् । यः सर्वोपरमे काले
सर्वानात्मन्युपसंहृत्य स्वात्मानन्दसुखे मोदते प्रकाशते
वा स देवः । अत्रैते मन्त्ररहस्यश्लोका भवन्ति । मेधा
दक्षिणामूर्तिमन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः ।
देवता दक्षिणास्यः । मन्त्रेणाङ्गन्यासः । ॐ आदौ नम उच्चार्य
ततो भगवते पदम् । दक्षिणेति पदं पश्चान्मूर्तये पदमुद्धरेत् ॥ १॥

अस्मच्छब्दं चतुर्थ्यन्तं मेधां प्रज्ञां पदं वदेत् ।
समुच्चार्य ततो वायुबीजं च्छं च ततः पठेत् ।
अग्निजायां ततस्त्वेष चतुर्विंशाक्षरो मनुः ॥ २॥

ध्यानम् ॥

स्फटिकरजतवर्णं मौक्तिकीमक्षमाला-
    ममृतकलशविद्यां ज्ञानमुद्रां कराग्रे ।
दधतमुरगकक्ष्यं चन्द्रचूडं त्रिनेत्रं
    विधृतविविधभूषं दक्षिणामूर्तिमीडे ॥ ३॥

मन्त्रेण न्यासः ।
आदौ वेदादिमुच्चार्य स्वराद्यं सविसर्गकम् ।

पञ्चार्णं तत उद्धृत्य अन्तरं सविसर्गकम् ।
अन्ते समुद्धरेत्तारं मनुरेष नवाक्षरः ॥ ४॥

मुद्रां भद्रार्थदात्रीं स परशुहरिणं बाहुभिर्बाहुमेकं
जान्वासक्तं दधानो भुजगबिलसमाबद्धकक्ष्यो वटाधः ।
आसीनश्चन्द्रखण्डप्रतिघटितजटाक्षीरगौरस्त्रिनेत्रो
दद्यादाद्यः शुकाद्यैर्मुनिभिरभिवृतो भावशुद्धिं भवो नः ॥ ५॥

मन्त्रेण न्यासः ब्रह्मर्षिन्यासः -
तारं ब्रूंनम उच्चार्य मायां वाग्भवमेव च ।
दक्षिणापदमुच्चार्य ततः स्यान्मूर्तये पदम् ॥ ६॥

ज्ञानं देहि पदं पश्चाद्वह्निजायां ततो न्यसेत् ।
मनुरष्टादशार्णोऽयं सर्वमन्त्रेषु गोपितः ॥ ७॥

भस्मव्यापाण्डुरङ्गः शशिशकलधरो ज्ञानमुद्राक्षमाला-
वीणापुस्तैर्विराजत्करकमलधरो योगपट्टाभिरामः ।
व्याख्यापीठे निषण्णो मुनिवरनिकरैः सेव्यमानः प्रसन्नः
सव्यालः कृत्तिवासाः सततमवतु नो दक्षिणामूर्तिरीशः ॥ ८॥

मन्त्रेण न्यासः । [ब्रह्मर्षिन्यासः ।]
तारं परं रमाबीजं वदेत्सांबशिवाय च ।
तुभ्यं चानलजायां मनुर्द्वादशवर्णकः ॥ ९॥

वीणां करैः पुस्तकमक्षमालां
बिभ्राणमभ्राभगलं वराढ्यम् ।
फणीन्द्रकक्ष्यं मुनिभिः शुकाद्यैः
सेव्यं वटाधः कृतनीडमीडे ॥ १०॥

विष्णू ऋषिरनुष्टुप् छन्दः । देवता दक्षिणास्यः ।
मन्त्रेण न्यासः ।
तारं नमो भगवते तुभ्यं वटपदं ततः ।
मूलेति पदमुच्चार्य वासिने पदमुद्धरेत् ॥ ११॥

प्रज्ञामेधापदं पश्चादादिसिद्धिं ततो वदेत् ।
दायिने पदमुच्चार्य मायिने नम उद्धरेत् ॥ १२॥

वागीशाय ततः पश्चान्महाज्ञानपदं ततः ।

वह्निजायां ततस्त्वेष द्वात्रिंशद्वर्णको मनुः ।
आनुष्टुभो मन्त्रराजः सर्वमन्त्रोत्तमोतमः ॥ १३॥

ध्यानम् ।
मुद्रापुस्तकवह्निनागविलसद्बाहुं प्रसन्नाननं
मुक्ताहारविभूषणं शशिकलाभास्वत्किरीटोज्ज्वलम् ।
अज्ञानापहमादिमादिमगिरामर्थं भवानीपतिं
न्यग्रोधान्तनिवासिनं परगुरुं ध्यायाम्यभीष्टाप्तये ॥ १४॥

मौनमुद्रा ।
सोऽहमिति यावदास्थितिः सनिष्ठा भवति ।
तदभेदेन मन्त्राम्रेडनं ज्ञानसाधनम् ।
चित्ते तदेकतानता परिकरः । अङ्गचेष्टार्पणं बलिः ।
त्रीणि धामानि कालः । द्वादशान्तपदं स्थानमिति ।
ते ह पुनः श्रद्दधानास्तं प्रत्यूचुः ।
कथं वाऽस्योदयः । किं स्वरूपम् । को वाऽस्योपासक इति ।
स होवाच ।
वैराग्यतैलसम्पूर्णे भक्तिवर्तिसमन्विते ।
प्रबोधपूर्णपात्रे तु ज्ञप्तिदीपं विलोकयेत् ॥ १५॥

मोहान्धकारे निःसारे उदेति स्वयमेव हि ।
वैराग्यमरणिं कृत्वा ज्ञानं कृत्वोत्तरारणिम् ॥ १६॥

गाढतामिस्रसंशान्त्यै गूढमर्थं निवेदयेत् ।
मोहभानुजसंक्रान्तं विवेकाख्यं मृकण्डुजम् ॥ १७॥

तत्त्वाविचारपाशेन बद्धं द्वैतभयातुरम् ।
उज्जीवयन्निजानन्दे स्वस्वरूपेण संस्थितः ॥ १८॥

शेमुषी दक्षिणा प्रोक्ता सा यस्याभीक्षणे मुखम् ।
दक्षिणाभिमुखः प्रोक्तः शिवोऽसौ ब्रह्मवादिभिः ॥ १९॥

सर्गादिकाले भगवान्विरिञ्चि-
रुपास्यैनं सर्गसामर्थ्यमाप्य ।
तुतोष चित्ते वाञ्छितार्थांश्च लब्ध्वा
धन्यः सोपास्योपासको भवति धाता ॥ २०॥

य इमां परमरहस्यशिवतत्त्वविद्यामधीते स सर्वपापेभ्यो मुक्तो भवति ।

य एवं वेद स कैवल्यमनुभवतीत्युपनिषत् ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति दक्षिणामूर्त्युपनिषत्समाप्ता ॥